जातवेदो वपया गच्छ देवांस्त्वं[1] हि होता प्रथमो बभूथ।
घृतस्याग्ने[2] तन्वा संभव सत्यास्सन्तु यजमानस्य कामाः ॥ ॥ ८ ॥

cf TS 3, 1, 4, (Maitr S 1, 2, 15)

प्रजापतेर्वै पशवो जाताश्च जायमानाश्च रुद्रस्य जाता व्यृद्धेन वा एष पशुना चरति य एतयोरसन्तं पशुं तमनिर्याच्यैतयोरालभते ययोरेव[3] पशुस्तयोरेवैनं निर्याच्य तेनानुमतेन प्रसूतेनर्ह्नोत्येव[4] जीवन्पशुस्स्वर्गं लोकं गमयितव्य इत्याहुर्न मृतस्स्वर्गं लोकं गन्तुमर्हतीति प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति जीवन्तमेवैनं स्वर्गं लोकं गमयति ये च वै ग्राम्याः पशवो ये चारण्यास्त एतमालभ्यमानमनुध्यायन्ति स ईश्वरो यजमानो ऽपशुः पराभवितोर्ये वध्यमानमनुवध्यमाना य आरण्याः पशवो विश्वरूपा इति पशूनामेवैषा संप्रमुक्तिः पञ्चैतानि जुहोति पाङ्क्ताः[5] पशवो यावानेव पशुस्तं स्वर्गं लोकं गमयति ॥ यदवघ्रापयति तमेव निर्दिष्टमालभते पशुर्वै यज्ञो यज्ञात्स[6] यजमान एतत्पशुमालभत[7] इत्याहुः कर्तर्हि यजमानो भवतीति नाना प्राणो यजमानस्य पशुनेति प्राणा एवैनयोर्व्यावर्तयति यज्ञेन वा एनमेतद्धर्धयति[8] यन्नाना प्राण इत्याह सम्यगायुर्यज्ञो यज्ञपतौ दधात्विति यज्ञेनैवैनं समर्धयत्यधिरज्जू[9] या एता अमुष्मिंल्लोके पशुश्च यजमानश्च ययोरेतेन पाशं न प्रमुञ्चत्युपेत शमितारो देवानां दसितं हविः पशोः पाशं प्रमुञ्चत पाशं यज्ञपतेरधीति पाशमेवैनयोः प्रमुञ्चति वरुणपाशं स ह ता अमुष्मिंल्लोके ऽपरज्जुर्यस्यैवं क्रियते यद्यभिचरेद्यो नो द्वेष्ट्यधरस्स पदीष्ट[10] तस्मिन्पाशान्प्रतिमुञ्चाम एतानिति स्तम्भं वा दारु वाभिदध्यात्पाशमेवास्मिन्प्रतिमुञ्चति वरुणपाशमाहव-

---

[1] So corr Ch स्त्व [2] So corr. Ch स्याग्ने [3] So corr. Ch यथेव [4] So corr Ch ह्नोत्येव [5] So corr. Ch पाक्त [6] So corr Ch ता [7] So corr. Ch भत [8] So corr Ch द्धमर्धयति [9] So corr Ch रज्जु [10] So corr. Ch सम्पदाष्टा

नीयं वा एतद्वर्धयति[1] यत्पशुश्रपणं करोति त्वामु त्ये[2] दधिरे प्रथमं विचक्षमिति मेध्यमेवैनं यज्ञियं करोति जातवेदो वपया गच्छ देवानिति स्वर्गमेवैनं लोकं गमयति यद्वा ऋषीणां च देवानां च यज्ञस्यापूतमासीत्तदेतैरपुनत यदेवास्य यज्ञस्यापूतं तदेतैः पुनीत आव्यं वा एतैस्तेऽपाजयंस्तदपाव्यानामपाव्यत्वमाव्यमेवैतैरपजयति ॥ ९ ॥

cf TS 3 1, 5

तृतीयस्यां[3] वै दिवि सोम आसीत्तं[4] गायत्र्याहरत्तस्य पर्णमच्छिद्यत स[5] पर्णो[6] ऽभवत्तत्पर्णस्य पर्णत्वं तस्मात्सर्वे वृक्षाः पर्णवन्तोऽथैष एव पर्ण उच्यते यत्पर्णशाखा भवति तमेव सोममवरुन्द्धे देवा वै ब्रह्मन्समवदन्त तत्पर्ण उपाशृणोत्सुश्रवा वै नामैष न बधिरो भवति य एवं वेद यत्पर्णशाखया प्रापयति ब्रह्मणैवैनाः[7] प्रापयति प्रजापतिः पशूनसृजत तानयं[8] देवो ऽभ्यमन्यत[9] तं शम्याशमयत्तच्छम्याशमीत्वं यच्छमीशाखया प्रापयति शान्त्या अपां वा एतदोषधीनां तेजो यद्दर्भा यद्दर्भपिञ्जूलैः प्रापयत्यपामेवैना ओषधीनां तेजसा प्रापयतीषे[10] त्वोर्जे[11] इतीषमेवोर्जं यज्ञे दधाति वायवस्थेति वायुर्वा अन्तरिक्षस्याध्यक्षो ऽन्तरिक्षदेवत्याः पशवो वायुरेवैनानन्तरिक्षाय परिददाति प्र वा एनानेतदाकरोति यद्वायवस्थेत्याहारण्यस्येव[12] हि वायुरुपायवस्थेति[13] यजमानायैव पशूनपाकरोति देवो वस्सविता प्रापयत्विति प्रसूत्यै श्रेष्ठतमाय कर्मण इति यज्ञो वै श्रेष्ठ-

---

[1] So corr Ch एतद्वृद्धयर्धयति [2] So corr Ch nicht deutlich त्यौ oder त्यौ त्यो त्यां, aber vgl den Vers oben im vorhergehenden Capitel [3] Dies Capitel findet sich auch in T1, welche Handschrift daher hier verglichen ist, die Accente sind nach T1 gesetzt [4] Ch ता, T1 त Kap S 46, 8 = T1, ohne Accent. [5] So T1, desgl Kap S 46, 8, ohne Accent, Ch सो [6] Der Accent fehlt in T1 und ist von mir ergänzt [7] So T1, Ch ऐन, Kap S 46, 8 ऐना [8] So T1, desgl Kap S 46, 8, ohne Accent, Ch तानयन्दे॰ [9] So corr mit Caland, T1 देवेभ्यो मन्येत, Ch देवेभ्यो मन्यत, desgl Kap S [10] So corr Ch तोषे, T1 यति इषे, Kap S 46, 8 तीषे [11] Ch त्वार्जे, Kap S 46, 8 त्वार्जे त्वेतीषमो॰ [12] So T1, Ch यद्वायवस्थे॰ [13] So T1, Ch पायवास्थे॰

तमं कर्मणाप्यायध्वमघ्न्या देवभागमिति वत्सेभ्यश्च वा एतां मनुष्येभ्यश्च पुराप्यायन्तो[1] ऽथैतर्हि देवेभ्य एवैना आप्याययति[2] प्रजावतीरनमीवा[3] अयक्ष्मा इति प्रजावतीरेवैना अनमीवा[4] अयक्ष्माः करोति ॥ मा वस्तेन[5] ईशत माघशंस इत्याशिषमेवाशास्ते परि वो रुद्रस्य हेतिर्वृणक्त्विति रुद्रमेव पशुभिः परिवृणक्त्यघातुको ऽस्य रुद्रः पशून्भवति[6] यस्यैवं विदुषो यश्चैवं[7] विद्वान्हविषे गाः प्रापयति ध्रुवा अस्मिन्गोपतौ स्यातेति दृंहत्येवैना बह्वीरिति भूमानमेवैना गमयति यजमानस्य पशून्पाहीति यजमानस्य पशूनां गोपीथाय प्रतीचीं शाखामुपगूहति तस्माद्ग्राम्याः[8] पशवस्सायमारण्याद्ग्राममायन्ति[9] यत्पराचीमुपगूहेदरण्ये हीयेरन्[10] ॥ १० ॥

cf Kap S 46, 8, Maitr S 4, 1, 1, TBr 3, 2, 1.

इत्येकोत्तरगतशाखाध्वर्युप्रभेदभिन्ने श्रीमद्यजुर्वेदे काठके चरकशाखायां मध्यमिकायां पात्नीवतं नाम त्रिंशं स्थानकं परिपूर्णम् ॥ संपूर्णा चेयं मध्यमिका ॥ शुभमस्तु ॥ शुभमस्तु ॥ सर्वजगताम् ॥[11]

---

[1] So T 1, desgl Kap S 46, 8, ohne Accent, Ch पुराप्यायते [2] So T 1, desgl Kap S 46, 8, ohne Accent, Ch आप्याययति [3] So T 1, Ch मीव [4] So T 1, Ch मीव [5] So T 1, Ch मा नस्स्तेन, Kap S 46, 8 मा वस्तेन [6] Ch पशुर्भवति [7] So corr Ch यश्चैव, T 1 यश्चैवं, Kap S 46, 8 यश्चैव [8] In T 1 eine kleine Lucke aus diesem Grunde ist der Accent von mir erganzt fur die Worte ग्राम्या. पशवस्सायमारण्या॰ [9] Ch ग्राममायान्ति, T 1 ग्राममायन्ति, Kap S 46, 8 *सायमारण्याद्ग्राममायन्ति, Maitr S 4, 1, 1 सायमरण्याद्ग्राममायन्ति* [10] Die drei letzten Worte des Textes in T 1 abgebrochen, daher der Accent von mir erganzt. Kap S 46, 8 ह्वरिण्ये हीयेरन् [11] So die Unterschrift des Capitels in Ch